KÂVYAMÂLÂ. 9.

THE

# SUBHADRÂHARAṆA

OF

# MÂDHAVABHATTA.

EDITED BY

PAṆDIT DURGÂPRASÂDA

AND

KÂS'ÎNÂTH PÂṆDURANG PARAB.

Second Revised Edition.

PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJÎ

PROPRIETOR OF JAVAJI DADAJI'S "NIRNAYA-SAGARA" PRESS.

BOMBAY.

1899.

*Price 4 Annas.*

काव्यमाला. ९.

श्रीमाधवभट्टप्रणीतं

# सुभद्राहरणम् ।

जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना महामहोपाध्याय-
पण्डितदुर्गाप्रसादेन, मुम्बापुरवासिना परवोपाह्व-
पाण्डुरङ्गात्मजकाशीनाथशर्मणा च
संशोधितम् ।

तच्च
मुम्ब ' निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम् ।

१८९९



मूल्यं रूप्यकपादः ।

# काव्यमाला ।

माधवभट्टविरचितं[1]

## सुभद्राहरणम् ।

शृङ्गारं हैमवत्या प्रथयति धनुषा वीरमास्येन हास्यं
बीभत्सं स्वकपालैर्भयमहिपतिना भ्रूविजृम्भेण रौद्रम् ।
कारुण्यं पुष्टपत्न्याद्भुतमरुणविधूषर्बुधैर्योऽक्षिभाग्भिः
शान्तं चित्तेन भूयात्स नवरसमयः शंकरः शर्मणे वः ॥ १ ॥

(नान्द्यन्ते)

**सूत्रधारः**—अलमनेन, यदेते श्रीपर्वते श्रीकण्ठपरिचरणाय दूरादुपागताः केनापि नाट्यप्रयोगेणानुरञ्जनीया रसविशेषविदः सभासदः ।

(प्रविश्य)

**पारिपार्श्वकः**—भाव, केनापि भवद्वचःश्रवणेनावधारयामि यन्मण्डलेश्वरभट्टात्मजेन श्रीमाधवेन निर्माय युष्मासु स्वाभाविकसुहृद्भावेन समर्पितं श्रीमत्सुभद्राहरणं नाम प्रसिद्धनायकोपेतं श्रीतिशब्दोपरञ्जितं श्रीगदितं[2] विस्मृतवन्तो भवन्तः । अविस्मरणं चावश्यकम् । यतः ।

जनताघनतापौघलोपकार्योपकारिकाः ।
महिता न हिताः कस्य साधवो माधवोक्तयः ॥ २ ॥

**सूत्रधारः**—(स्मृतिमभिनीय ।) मारिष, स्मृतम् । यत्रेयं तस्यैव कवेर्विनयोक्तिः—

---

१. कविरयं कुत्र कदा बभूवेति न निश्चयः, किं त्वेतदादर्शपुस्तकं १६६७ मिते विक्रमसंवत्सरे लिखितमस्ति. एतत्कविकृता प्रणयिमाधवचम्पूश्च समुपलभ्यते.

२. श्रीगदितमुपरूपकभेदः. तल्लक्षणं साहित्यदर्पणे षष्ठपरिच्छेदे—'प्रख्यातवृत्तमेकाङ्कं प्रख्यातोदात्तनायकम् । प्रसिद्धनायिकं गर्भविमर्शाभ्यां विवर्जितम् ॥ भारतीवृत्तिबहुलं श्रीतिशब्देन संयुतम् । मतं श्रीगदितं नाम विद्वद्भिरुपरूपकम् ॥'

ततिरिव फणिवल्ल्याः केवलानां दलानां
यदपि रुचिनिदानं गुम्फना मे न वाचाम् ।
तदपि रसगुणानामार्द्रपूगीफलाना-
मिव मुहुरनुषङ्गाद्रञ्जनाय क्षमैव ॥ ३ ॥

तदस्यैवोपरूपकप्रयोगः प्रसञ्जनीयोऽस्माभिः । यतः ।

नृत्यकर्मकुशलाः कुशीलवाः काव्यमेतदपि नव्यमीक्षितुम् ।
नायकश्च पुरुषोत्तमोऽर्जुनः संगता च रसवेदिनां सभा ॥ ४ ॥

**पारिपार्श्वकः**—तद्यावद्रङ्गभूमिकापरिग्रहं विरचयन्ति भवन्तस्ताव-त्कंचित्समयमाश्रित्य केनापि गीयताम् ।

**स्थापकः**—(स्वगतम् ।) अस्मिन्नर्थे गृहिण्येव प्रवीणेति तामाहूयाज्ञा-पयामि । (प्रकाशम् ।) आर्ये, इत एहि ।

(प्रविश्य पटाक्षेपेण ।)

**नटी**—अज्ज, इअ अम्हि । आणवेदु अज्जः । (क)

**स्थापकः**—आर्ये, विदग्धेयं परिषत्, अतस्तथा वसन्तसमयमधि-कृत्य गीयतां यथेयमियतैवानुरञ्जिता स्यात् ।

**नटी**—जं अज्जो आणवेदि । (इति संस्कृतमाश्रित्य गायति ।) (ख)

बहुविधपरिमलपवनो मदकलकलकण्ठनादकर्णसुखः ।
मन्मथमत्तयुवजनः कं न वसन्तो वशं कुरुते ॥ ५ ॥

**स्थापकः**—(आकर्ण्य ।) आर्ये,

रक्षता भारतीं वृत्तिं यतिभावानुबन्धिना ।
मोहितस्तव गीतेन पार्थेनेवामुना जनः ॥ ६ ॥

(इति निष्क्रान्तौ ।)

**प्रयोगातिशयेनामुखम् ।**

---

(क) आर्य, इयमस्मि । आज्ञापयत्वार्यः ।

(ख) यदार्य आज्ञापयति ।

(ततः प्रविशति सुभद्रानुरक्तचित्तवृत्तिर्यतिवेषोऽर्जुनः ।)

**अर्जुनः**—अहो चतुर्थाश्रमः किमपि परमानन्दनिधानम् । येनात्र

नानाकौसुमसौरभिण्युपवने सख्यं सुखैर्मारुतै-
　भैक्ष्ये भोज्यरुचिः सदोपनिषदि प्रीतिः प्रियायां परा ।
सौहित्यं सरसां जलैः सुलभया मूर्जत्वचाच्छादनं
　निद्रा निर्मलसैकते किमपरं राज्यं स्वतन्त्रस्थितिः ॥ ७ ॥

अन्यच्च ।

गृहे गृहे गृहस्थानां गृह्णतो ग्रासमग्रहम् ।
अपीडया ततः श्लाघ्या वृत्तिर्माधुकरी मुनेः ॥ ८ ॥

तत्कस्यापि गृहमेधिनो गृहं तावद्भिक्षावेलातिपातमनाचरन्व्रजामि । (इति परिक्रम्य पुरतोऽवलोक्य ।) अहो, कस्येदं गृहम् ।

(प्रविश्य ।)

**दौवारिकः**—(अञ्जलिं बद्ध्वा ।) भअवं, सिरिमन्तस्स देवस्स बलभद्दस्सेदं घरम् । ता पविसदु महाणुहाओ । जदो एत्थ अवारिअदुआरो अदिहिजणो णाम । (क)

**अर्जुनः**—(परिक्रम्य । कादम्बरीगन्धमाघ्राय । स्वगतम् ।) यदेतत्तस्यैव महानुभावस्य तालध्वजस्य विहरणस्थानम् । (इति परिक्रम्य निर्वृत्तिं नाटयन् । आकाशे ।) किं ब्रूषे—'महाणुहाअ, मा णिवुत्तिहि । खणं चिट्ठ, जाव भट्टिणो बलभद्दस्स कणिट्ठभअणी सुहद्दा पच्चहिआदिहिसक्कारकारिणी अमसिद्धिपदे भिक्खं उअणएदि' इति । तेन हि स्थीयते गोदोहमात्रम् । (इत्यभिधाय चिन्तयति ।) अहो विधेरानुकूल्यम् । (ख)

---

(क) भगवन्, श्रीमतो देवस्य बलभद्रस्येदं गृहम् । तत्प्रविशतु महानुभावः । यतोऽत्रावारितद्वारोऽतिथिजनो नाम ।

(ख) महानुभाव, मा निवर्तस्व । क्षणं तिष्ठ, यावद्भर्तुर्बलभद्रस्य कनिष्ठभगिनी सुभद्रा प्रात्यहिकातिथिसत्कारकारिणी महासिद्धिपदे भिक्षामुपनयति ।

अम्भोदविरहेऽप्यार्तचातकस्याम्बुवर्षणम्।
मध्याह्नेऽपि चकोरस्य चन्द्रिकाचमनं-चिरात्॥ ९॥

(ततः प्रविशति श्रीमती सुभद्रा सखी च।)

**सुभद्रा**—को एत्थ अदिहिविसेसो जो इमाए सक्करीअदि ? (क)

**अर्जुनः**—(पुरोऽवलोक्य सहर्षमात्मगतम्।) अहह, अदृष्टपूर्वः सौन्दर्यातिशयः। तथा हि।

यदीयं श्रीरिन्दोः कथमिह तदा साह्नि विलसे-
त्प्रभेयं भानोश्चेदमृतरसवर्षं न कलयेत्।
स्फुरन्ती गेहेऽस्मिन्न च तडिदियं मेघविरहा-
त्ततो मन्ये दृष्टेर्मम सुकृतवल्लीफलमियम्॥ १०॥

किं च।

धन्यश्चतुर्थाश्रमवेष एष च्छलाद्यदङ्गीकरणेन बाढम्।
पूज्यत्वमीदृग्विधराजपुत्र्या गतोऽस्म्यहं दीर्घविलोचनायाः॥ ११॥

(प्रकाशम्।) अयमहमस्मि। (इत्युपसर्पति।)

**सुभद्रा**—(विलोक्य स्वगतम्।) अम्मो, न एसो भिक्खुओ, किं दु कोवि कामसरिसो देवो सव्वस्स वि सव्वस्सं गहीदुं भिक्खोवहिणा पडिब्भमइ। होदु। जाणिस्सम्। (प्रकाशम्।) एसा भिक्खा गिहीदु महाणुहाओ। (ख) (इति साचीकृतमुखी सकम्पकराङ्गुलिर्दातुमिच्छति।)

**अर्जुनः**—(कपटकोपं प्रकटीकृत्य।) अयि अपरिज्ञातातिथिपूजाविधे, किमेवमनादरेण मादृशास्तपस्विनो भिक्षापरिग्रहं कुर्वन्ति। न वयं केवलं बुभुक्षिता भिक्षवो भिक्षायै परिभ्रमामः, किं तु भावावबोधायेति।

---

(क) कोऽत्रातिथिविशेषो योऽनया सत्क्रियते।

(ख) अम्ब, नैष भिक्षुकः, किं तु कोऽपि कामसदृशो देवः सर्वस्यापि सर्वस्वं ग्रहीतुं भिक्षोपधिना परिभ्रमति। भवतु। ज्ञास्ये। एषा भिक्षा गृह्णातु महानुभावः।

**सुभद्रा**—(सवैलक्ष्यभयं जनान्तिकम् ।) हा सुमदिए, किं सच्चं एव्व एस महाणुहाओ भणदि॰। (क)

**सुमतिका**—जाणिस्सम् । (अर्जुनं प्रति ।) भअवं, एस कुलकण्णआणं सुहाओ जेव्व जं पच्चअमन्तरेण संमुहं ण पेक्खन्ति । ता पसीददु महाणुहाओ । (ख)

**अर्जुनः**—वयं प्रसन्ना एव सः । परमेनां प्रसादय ।

**सुमतिका**—(सुभद्रां प्रति ।) सहि, एदे महासिआ गिण्हे आदवतावित्रा जलाधाआ विअ उअरि उण्हा होन्ति, ण हिअए । ता संमुहीभविअ पूजेहि णम् । (ग)

(सुभद्रा पूजार्थमञ्जलिं कृत्वा प्रणमति ।)

**अर्जुनः**—सुमतिके, सत्यमेव भीता त्वत्प्रियसखी । यतोऽस्याम्

निःश्वासग्रहकम्पमानवसनं वक्षः समुद्वीक्ष्यते
चक्षुर्निश्चलतारकं दरनमद्भ्रूभङ्गकाम्यं मुखम् ।

**सुमतिका**—महाभाअ, अदिमेत्तदुःसहाआ अणुप्पण्णे अवि णिमित्ते वेवइ । किं उण उप्पण्णमिणि णिमित्त इति । (घ)

**अर्जुनः**—(सुभद्रां प्रति ।)

तत्रासेन कृतं कुरङ्गनयने भावावलोकाय ते
व्याजोक्तिर्विहिता मयाथ भवती भूयात्प्रसादोन्मुखी ॥ १२ ॥

(इत्यभिधाय ।) देहि श्रीमति, भिक्षाम् । (इति गृह्णाति ।)

---

॰(क) हा सुमतिके, किं सत्यमेवैष महानुभावो भणति ।

(ख) ज्ञास्ये । भगवन्, एष कुलकन्यकानां स्वभाव एव यत्प्रत्ययमन्तरेण संमुखं न पश्यन्ति । तत्प्रसीदतु महानुभावः ।

(ग) सखि, एते महासिद्धा ग्रीष्मे आतपतापिता जलाधारा इवोपर्युष्णा भवन्ति, न हृदये । तत्संमुखीभूय पूजयैतान् ।

(घ) महाभाग, अतिमात्रदुःस्वभावा अनुपपन्नेऽपि निमित्ते वेपन्ते । किं पुनरुपपन्नवति निमित्त इति ।

**सुमतिका**—सहि सुभद्दे, ण एसो माणसो, किं दु तुह अहिलहिदं फलं दाउं महिन्दो वा महिन्दसरिसो वा को वि कवडवेसं धारिअ आअदो त्ति तक्केमि । ता सव्वथा अस्स अहिमदं सक्कारं करेहि । (क)

**सुभद्रा**—(आत्मगतम् ।) एसा भणादि फलं दाउं समागदो त्ति, अहं उण फलं अ ण जाणामि । (प्रकाशम् । अपवार्य ) हला, मए एअस्स अप्पा वि समप्पिदो जइ एस पडिग्गहेण पसादं करोदि । (ख)

**सुमतिका**—सहि, एआरिसा महाणुहाआ किं सहिअआ ण होन्ति । जेण पिअसहीए एवं भणीअदि । (ग)

**अर्जुनः**—(सविनयम् ।) स्वाधीनोऽयं जनः । तद्विस्रब्धमभिधीयताम् । कीदृशोऽस्याः प्रात्यहिकातिथिपूजानियमे संकल्पः ।

**सुमतिका**—अहिमदं वरं लहेय त्ति । (घ)

**अर्जुनः**—(स्वगतम् ।) कोऽस्या अभिमतो वरो भवेत् । भवतु । ज्ञास्यामि । (प्रकाशम् ।) ततस्ततः ।

**सुमतिका**—(सलज्जम् ।) अग्गतो महाणुहाआ जाणन्ति किं वा पिअसही । (ङ)

**अर्जुनः**—अप्रकटमभिदधासि किम् ।

---

(क) सखि सुभद्रे, नैष मानुषः, किं तु तवाभिलषितं फलं दातुं महेन्द्रो वा महेन्द्रसदृशो वा कोऽपि कपटवेषं धृत्वागत इति तर्कयामि । तत्सर्वथास्याभिमतं सत्कारं कुरु ।

(ख) एषा भणति फलं दातुं समागत इति, अहं पुनः फलं च न जानामि । सखि, मयैतस्मा आत्मापि समर्पितो यद्येष परिग्रहेण प्रसादं करोति ।

(ग) सखि, एतादृशा महानुभावाः किं सहृदया न भवन्ति । येन प्रियसख्या एवं भण्यते ।

(घ) अभिमतं वरं लभेयेति ।

(ङ) अग्रतो महानुभावा जानन्ति किं वा प्रियसखी ।

**सुमतिका**—अहं उण एत्तिअं आणामि जइ भवं अत्तणो कुलं णामहेअं अ णिवेदेति तदो इअं णिअमं ओसाणं णेदि । (क)

**सुभद्रा**—(स्वगतम् ।) एसा पिअसही मह हिअअट्ठिअं जेव्व मन्तेदि । (प्रकाशम् ।) सहि, अहं गमिस्सम् । को आणादि तुए किं भणीअदि । (ख)

**सुमतिका**—ण जुत्तइ अदिहिविसेसं असक्करिअ पअमत्तं वि चलिदुम् । (ग)

**सुभद्रा**—(अपवार्य ।) तदो पुच्छिहि से णाम कुलं अ । (घ)

**सुमतिका**—तह । (इति पृच्छति ।) (ङ)

**अर्जुनः**—श्रीमति, ककुभद्रुमपर्यायभूतं नो नाम । कुलं खलु यस्मिन्नवनिखण्डे कर्माधिकारस्तदेव जानीहि ।

**सुमतिका**—पिअसहि, ओधारिदं मए णाम अज्जुणेत्ति । कुलं भारदं त्ति । (च)

**अर्जुनः**—अत एव सुमतिकासि त्वम् ।

**सुभद्रा**—(अपवार्य ।) हला सुमदिए, सच्चं सो जेव्व महाभाओ जेण पढमं सुणिअमत्तेण जेव्व अहं वसीकिदा । (छ)

**सुमतिका**—पिअसहि, को सो । (ज)

---

(क) अहं पुनरेतावज्जानामि यदि भवन्त आत्मनः कुलं नामधेयं च निवेदयन्ति तदेयं नियममवसानं नयति ।

(ख) एषा प्रियसखी मम हृदयस्थितमेव मन्त्रयति । सखि, अहं गमिष्ये । को जानाति त्वया किं भण्यते ।

(ग) न युज्यतेऽतिथिविशेषमसत्कृत्य पदमात्रमपि चलितुम् ।

(घ) ततः पृच्छास्य नाम कुलं च ।

(ङ) तथा ।

(च) प्रियसखि, अवधारितं मया नाम अर्जुन इति, कुलं भारतमिति ।

(छ) सखि सुमतिके, सत्यं स एव महाभागो येन प्रथमं श्रुतमात्रेणैवाहं वशीकृता ।

(ज) प्रियसखि, कः सः ।

**सुभद्रा**—(चित्रपटं दर्शयित्वा ।) हला, एसो सो । (क)

**सुमतिका**—सच्चं संवददि ।

ते ज्जेव्व बाहुदण्डा मुहं तह ज्जेव्व तारिसो अ उरो ।
णयणाइं तारिसाइं किं उण सव्वा वि आकिदी तस्स ॥ १३ ॥

अहवा किं एदेण । जदो क्खु कुलकण्णआणं चित्तासङ्गचक्खुराआणं विसंवादो ण होइ । (ख)

**सुभद्रा**—(पुनरप्यपवार्य ।) हला, एक्कं अवरं वि पुच्छिहि णम् । ता किं णिमित्तं कवडवेसं धारीअदि । (ग)

**सुमतिका**—तह । (घ) (इति पृच्छति ।)

**अर्जुनः**—केनापि निमित्तेन । अथवास्या एव

दर्शनभवितव्यतया भगवत्याकारि सर्वमिदम् ।
कथमन्यथैतदन्तःपुरे मम स्यात्समागमनम् ॥ १४ ॥

इति ।

(अथ तस्मिन्नवसरे सुभद्रार्जुनौ)

स्तम्भारम्भणनिश्चलौ तदनु च प्रोद्भिन्नरोमोद्गमौ
बाष्पाम्बुस्थगितेक्षणौ करपुटस्विन्नौ सकम्पौ ततः ।
कण्ठे गर्भितगद्गदावनुपदं वर्णान्तरेणाश्रितौ
लीनावेकरसे परस्परभयौ स्वस्थानगौ तौ ततः ॥ १५ ॥

---

(क) सखि, एष सः ।

(ख) सत्यं संवदति ।

तावेव बाहुदण्डौ मुखं तथैव तादृशं चोरः ।
नयने तादृशे किं पुनः सर्वाप्याकृतिस्तस्य ॥

अथवा किमेतेन । यतः खलु कुलकन्यकानां चित्तासङ्गचक्षूरागाणां विसंवादो न भवति ।

(ग) सखि, एकमपरमपि पृच्छैनम् । तत्किं निमित्तं कपटवेषो धार्यते ।

(घ) तथा ।

(नेपथ्ये कलकलः । सर्वे ससंभ्रममाकर्णयन्ति ।)

**सुमतिका**—सहि, अच्चाहिदं किं वि । ता इमं विसज्जिअ अब्भन्तरं पविसामो । (क)

**सुभद्रा**—(अर्जुनं विलोकयन्ती ।) हला सुमदिए, एणं विण्णवेहि पुणो वि दंसणपसादं करिस्सदि त्ति । (ख)

**अर्जुनः**—श्रीमति, भवत्यपि तथा । (इत्यभिधाय ।) श्रेयांसि बहुविघ्नानि भवन्ति । (इति वदन्दुर्मनायमानो निष्क्रान्तः ।)

(ते चान्तः प्रविशतः ।)

(पुनर्नेपथ्ये ।)

उच्चैः सद्म विलङ्घयन्नपहरन्नारामपुष्पोत्करा-
न्द्रागक्षिभ्रुवचालनैर्विकलयन्नारात्पुरंध्रीजनम् ।
लाङ्गूलं भ्रमयन्नुदग्रदशनान्निष्पिष्य कोलाहलं
कुर्वन्नुद्भटपाणिपादनखरः कीशोऽयमुत्सर्पति ॥ १६ ॥

तन्निवेदयत श्रीमते बलदेवाय, यदेनं द्विविदमार्गानुगामिनं करोति ।

(ततः प्रविशति स्खलन्नीलवसनः सचषकपाणिः श्रीमान्बलदेवः ।)

**बलदेवः**—(सक्रोधं बहिरागत्य ।) आः, कोऽयं कृतान्तातिथी भवितुमिच्छति ।

(प्रविश्य ।)

**श्रीरङ्गो नाम ब्राह्मणः**—श्रीमन्बलदेव, परित्रायस्व परित्रायस्व ।

उच्चैः सद्म विलङ्घयन्नपहरन्नारामपुष्पोत्करा-
न्द्रागक्षिभ्रुवचालनैर्विकलयन्नारात्पुरंध्रीजनम् ।
लाङ्गूलं भ्रमयन्नुदग्रदशनान्निष्पिष्य कोलाहलं
कुर्वन्नुद्भटपाणिपादनखरो व्याघ्रोऽयमुत्सर्पति ॥ १६ ॥

(इति पूर्वोक्तं श्लोकं पठति ।)

**बलदेवः**—कथं व्याघ्रः ।

---

(क) सखि, अत्याहितं किमपि । तदिमं विसृज्याभ्यन्तरं प्रविशावः ।

(ख) सखि सुमतिके, एनं विज्ञापय पुनरपि दर्शनप्रसादं करिष्यतीति ।

**श्रीरङ्गः**—नहि नहि स्वामिन्, त्रासवशात्करणापाटवं मम जातम् । किं तु कीशोऽयमुत्सर्पति ।

**बलदेवः**—(सहासम् ।) अहो जात्यैव भीरवो ब्राह्मणाः, यदेतेऽल्पेनैव निमित्तेन बिभ्यति । (पुनः क्रोधं नाटयित्वा मदस्खलितकेन ।) तथापि कुकुत्र सस-पपापिष्ठः । (तत्तत्क्रियामभिनयन् ।)

किं कृष्ट्वा हहलेन हन्मि मुमुजेनाक्षिप्य भ्रद्गामि वा
किं वां तं चुचुचूर्णयामि मुसलाघातेन चूर्णाघनम् ।
किं वोच्चैर्धधरातले ससकलं संपातये दुद्रुतं
किं वा तेन सिसीधु पूरय पपापात्रे पिबामि क्षणम् ॥ १७ ॥

**ब्राह्मणः**—(दूरे स्थित्वा कुम्भकं विरचयन् ।) श्रीमन्नीलाम्बर, संहर क्रोधम् । स कपिर्मान्दुरीयो मन्दुरापालेन स्वस्थानं नीतः ।

**बलदेवः**—(इति श्रुत्वा क्रोधं संहरन्सर्वतोऽवलोक्य । स्वगतम् ।) कथं वसन्तोत्सवारम्भः । यतः ।

उद्धूयन्ते विचित्राः प्रतियदुभवनं केतुबद्धाः पताकाः
स्थाप्यन्ते द्वारदेशे जलभृतकलशाः पार्श्वरम्भाभिरामाः ।
वासः कौसुम्भमेताः परिदधति नवं कन्यकाः कल्पिताङ्ग-
स्वर्णालंकारकाम्याः पुरवनविशिखाः संस्क्रियन्ते नियुक्तैः ॥ १८ ॥

(तथा वदन् ।) अन्तः पुरं प्रविश्य प्रियामेव पृच्छामि । (इत्यन्तःपुरप्रवेशं नाटयन्परिक्रम्य पृच्छति ।) प्रिये, त्वया ज्ञायते न वा यथायं वसन्तोत्सवसमय इति ।

**रेवती**—अज्जउत्त, किं ण आणासि । अण्णहा कहं लीलोवअरणविसेसारम्भो । (क)

**बलदेवः**—सत्यं दृश्यत एव ।

काचिद्बध्नाति मालां सुरभिसुमनसां कापि काश्मीरपिण्डीः
श्रीखण्डाम्भोभिरालोडयति बहुविधं पाकमेका करोति ।

---

(क) आर्यपुत्र, किं न जानासि । अन्यथा कथं लीलोपकरणविशेषारम्भः ।

वीणाद्यं वाद्यमन्या विरचयति परा वारुणीं सोपदंशां
सामोदां निर्मिमीते वसनचयमियं रङ्गचित्रं तनोति ॥ १९ ॥

तत्किमयमुत्सवः श्रीमत्याभ्यन्तर एव कार्यो बहिरेव वा । कथं वा संप्रदायः ।

**रेवती**—(स्मितं कृत्वा ।) कहं विसुमरिदं अज्जउत्तेण, जं पडिसंवच्छरं अअं महूसवो होदि । (क)

**बलदेवः**—प्रिये, एवं विस्मृतं मया । यतः ।

संदर्शनेन श्रीमत्याः सदोत्साहवतो मम ।
न वसन्तोत्सवः सुभ्रु साधर्म्येण विशिष्यते ॥ २० ॥

(रेवती सलज्जमन्यतः पश्यति ।)

**बलदेवः**—ततस्ततः ।

**रेवती**—एत्थ एस क्कमो, जं अम्हारिसाओ अब्भन्तरे विहरन्ति, कुलकण्णआओ बहिं ज्जेव्व गदुअ खेलिस्सन्ति । तेण अण्णाहिं जदुकण्णआहिं समं अम्हाणं किअमङ्गलमण्डणा तत्थ सुभद्दा गमिस्सदित्ति । (ख)

**बलदेवः**—यद्येवं तर्ह्यावां गृहाभ्यन्तर एव विहरावः ।

(इति निष्क्रान्तौ ।)

(ततः प्रविशति यथोक्तमण्डना सुभद्रा सुमतिका च ।)

**सुभद्रा**—(सोत्कण्ठम् ।) हला, एत्थ एदं महूसअं दट्ठुं सव्वो जणो आअदो । ता सो वि महाभाओ आअदो भवे ण वा । (वामाक्षिस्पन्दनं सूचयित्वा ।) सव्वधा आअदोत्ति तक्केमि । (ग)

---

(क) कथं विस्मृतमार्यपुत्रेण, यत्प्रतिसंवत्सरमयं मधूत्सवो भवति ।

(ख) अत्रैष क्रमः, यदस्मादृश्योऽभ्यन्तरे विहरन्ति, कुलकन्यका बहिरेव गत्वा खेलिष्यन्ति । तेनान्याभिर्यदुकन्यकाभिः सममस्माकं कृतमङ्गलमण्डना तत्र सुभद्रा गमिष्यतीति ।

(ग) सखि, अत्रेयं मधूत्सवं द्रष्टुं सर्वो जन आगतः । तत्सोऽपि महाभाग आगतो भवेन्न वा । सर्वथा आगत इति तर्कयामि ।

**सुमतिका**—पिअसहि, को संदेहो। जदो तवस्सिजणो वणोववणसआसं जेव्व चिट्ठदि। तेण हि दाणिं जेव्व पेक्खिदव्वो। (क)

**सुभद्रा**—होदु। सुमदिए, रक्खिणो कुदो गदा। (ख)

**सुमतिका**—किं ण आणादि पिअसही। ते उअवणादो बहि ज्जेव्व गुम्मट्ठाणे संठिआ। (ग)

**सुभद्रा**—तेण हि जाव कुलकण्णआओ लीलोवअरणं संपादेन्ति ताव अम्हे कुसुमावचअं करेम्ह। (घ)

**सुमतिका**—तह। (ङ)

(इत्युभे तथा कुरुतः।)

**सुभद्रा**—(कटाक्षेण दृष्ट्वा सभयव्रीडं शनैः।) सहि, पेक्ख। अग्गदो एतस्सिं माहवीमण्डवे उपविसिअ सो महाभाओ किं वि चिन्तअन्तो चिट्ठइ। (च)

**सुमतिका**—(निभृतं दृष्ट्वा।) सहि, विरहचिन्तासंदावं वहन्तो विअ लक्खीअदि। ता आणामि तुमं ज्जेव्व एदस्स संदावे णिमित्तम्। पढमं एव्वं ण पेक्खिदो। (छ)

**सुभद्रा**—तदो एत्थ अहं अवरज्झामि। (ज) (संस्कृतमाश्रित्य।)

---

(क) प्रियसखि, कः संदेहः। यतस्तपस्विजनो वनोपवनसकाशमेव तिष्ठति। तेन हीदानीमेव प्रेक्षितव्यः।

(ख) भवतु। सुमतिके, रक्षिणः कुतो गताः।

(ग) किं न जानाति प्रियसखी। ते उपवनतो बहिरेव गुल्मस्थाने संस्थिताः।

(घ) तेन हि यावत्कुलकन्यका लीलोपकरणं संपादयन्ति तावदावां कुसुमावचयं कुर्वः।

(ङ) तथा।

(च) सखि, पश्य। अग्रत एतस्मिन्माधवीमण्डप उपविश्य स महाभागः किमपि चिन्तयंस्तिष्ठति।

(छ) सखि, विरहचिन्तासंतापं वहन्निव लक्ष्यते। तज्जानामि त्वमेवैतस्य संतापे निमित्तम्। प्रथममेवं न प्रेक्षितः।

(ज) तदात्राहमपराध्यामि।

चपलं नयनं निरङ्कुशो मदनः कातरमङ्गनामनः।
सुरभिः समयो नवं वयः प्रथमं प्रेम किमालि सांप्रतम् ॥ २१ ॥

सुमतिका—तेण हि तुरिअं गदुअ एतेहिं कुसुमेहिं अच्चिअ कामदेवं पुणो वि एत्थ आअच्छिअ दंसणेण एदस्स संदावं अवणेस्ससि। (क)

(इत्युभे परिक्रामतः।)

(ततः प्रविशति विरहसंतापकार्श्यमुद्वहन्नर्जुनः।)

अर्जुनः—हा हन्त, तस्या दर्शनात्प्रभृति
शैत्यं केन यदद्य मर्मरदला जायन्त एते द्रुमाः
शुष्काम्भांसि सरांसि संनिधिवशात्किं चान्यदप्यद्भुतम्।
दीर्घोच्छ्वासपरम्परापरिचयान्मूर्छन्ति वाता यत-
स्तापः कीदृगयं ममाङ्गमधुना हा धिग्विधेऽधिष्ठितः ॥ २२ ॥

तदस्योपशमाभ्युपायस्तस्याः कोमलाङ्ग्याः परीरम्भ एवेति मन्ये। तस्य च निदानमत्रागतायाः सौहार्दश्रीसंभारसंभृतायास्तस्याः प्रसह्य हरणम्। तच्च संभवेत्, यदि मम सख्यमनुस्मरन्नन्तर्यामितया सर्वाशयज्ञः श्रीमान्वासुदेवो दारुकसारथिं रथं प्रस्थापयेत्। (इति चिन्तयन्नेव गम्भीरं रथचक्रध्वनिमाकर्ण्य।) किमयं

मन्दमन्दमनुगर्जति मेघः कूलसीम्नि जलधेरथवा मे।
भक्तवत्सलतया स विभुः स्वं स्यन्दनं प्रहितवान्सह यन्त्रा ॥ २३ ॥

(ततः प्रविशति रथारूढो दारुकः।)

दारुकः—एष
लोकालोकविलङ्घनं जलनिधेरन्तः प्रवेशोत्तरं
पातालान्तविलोकनं त्रिनयनब्रह्मालयातिक्रमम्।
कल्पान्तार्णवगोष्पदार्धकरणं कर्तुं समर्थो रथः
श्रीनाथस्य कृपावशात्किमपरं तत्किं न यत्र क्षमः ॥ २४ ॥

---

(क) तेन हि त्वरितं गत्वा एतैः कुसुमैरर्चयित्वा कामदेवं पुनरप्यत्रागत्य दर्शनेनैतस्य संतापमपनेष्यसि।

(परिक्रम्य।) अस्त्यत्र कुत्रापि तपस्विवेषः कनिष्ठकौन्तेयस्तमेतं रथमारोप्य भगवतः श्रीपतेरनुज्ञया तत्सारथ्यपरो भवामि। (इत्यन्वेषणं नाटयति।)

**अर्जुनः**—(श्रुत्वा ससंभ्रमम्।) भगवत्प्रियसारथे, एषोऽस्मि। भद्रं ते।

**दारुकः**—(पुरोऽवलोक्य स्वगतम्।) दिष्ट्यात्रैव श्रीमानर्जुनः। (प्रकाशम्। सविनयम्।) आयुष्मन्, भगवदाज्ञया भवत्सारथ्यं कर्तुमागतोऽस्मि। तदेतद्रथारोहणेनानुगृह्णातु मां भवान्।

**अर्जुनः**—(आत्मगतम्।) अहो भगवतः श्रीकान्तस्य स्वभक्तपक्षपातः। येन

संकर्षणमनःक्षोभमविचिन्त्यमहात्मना।
सह सारथिनात्मीयो रथः प्रस्थापितो मम॥ २५॥

(प्रकाशम्।) श्रीमन्दारुक, अनुगृहीतोऽस्मि भगवता श्रीवत्सलाञ्छनेन। (इत्यभिधाय कपटवेषं परिहृत्य निजं च रूपमास्थायारुरुक्षुः)

चेदिभूपमवधूय मानिनं रुक्मिणं च परिभूय रुक्मिणीम्।
योऽहरत्तमहमिष्टसिद्धये संस्मरामि रथराजमाश्रयन्॥ २६॥

(इति ध्यात्वा रथमारोहति।)

**दारुकः**—आयुष्मन्, कं देशमुपनयामि श्रीमन्तम्।

**अर्जुनः**—(धनुष्टंकारयन्।) श्रीमन्दारुक,

यत्रैताः कोटिशः कामं क्रीडन्ति कुलकन्यकाः।
तत्र मां नय

(सुभद्रां दृष्ट्वा।)

यद्वैषः स्त्रीभिर्यत्रार्च्यते स्मरः॥ २७॥

**दारुकः**—(कामदेवार्चनस्थानसमीपे रथं स्थापयित्वा।) श्रीमन्, रथस्वामिमतं साधयतु भवान्।

**अर्जुनः**—(रथादवरुह्य सर्वतो दृष्टिं निवेशयन्मन्मथमण्डपैकदेशस्थितां चकितनयनां कम्पमानोरूमेकाकिनीं सुभद्रामवलोक्य स्वगतम्।) इयं

भयात्पलायमानानां योषितामिह यूथतः।
हरिणीनामिव भ्रष्टा भाति मुग्धा मृगीव मे॥ २८॥

(इत्युपसृत्य तां पाणौ गृहीत्वा रथमारोहयन् ।)

साध्वसं सपदि सुन्दरि त्यज स्नेहभाजनममुं विलोकय ।
अर्जुनोऽस्मि शरणार्थिनामहं रक्षिता द्विषदकालमृत्युभूः ॥ २९ ॥

**सुभद्रा**—(भयं परित्यज्य सहर्षमात्मगतम् ।) एवमतक्किदोवणदाणि होन्ति अहिलसिदाइं । (प्रकाशम् ।) अज्जउत्त, एत्तिअं भअं मं ण पडिच्चअइ । जइ मह सोदरा सुणिस्सन्दि, तदो किं होइस्सदि त्ति । (क)

**अर्जुनः**—प्रिये, मा विभेहि । पश्य ।

आनीतो दारुकेणायं कृष्णस्यैवाज्ञया रथः ।
तत्प्रीत्या रौहिणेयस्तु रोषं विफलयिष्यति ॥ ३० ॥

अन्यच्च ।

रक्षिणो भुवि विपक्षतां परे क्षत्रिया ननु भजन्ति चेत्पुरा ।
क्षेप्तुमद्य समरे क्षणेन तान्यत्क्षमोऽस्मि तदलं भिया प्रिये ॥ ३१ ॥

किं च ।

अर्वन्तश्चेदथर्वान्तरहननरुचः सारथिश्चेत्कृशानुः
सङ्ग्रामस्यन्दनश्चेत्प्रलयपरिपतन्मण्डलं चण्डभानोः ।
योद्धा चेत्स्यात्कृतान्तः स्वयमिह भगवानुग्रमुद्यम्य दण्डं
हन्तुं तं हन्त चापे तदपि शरमहं संदधे न द्वितीयम् ॥ ३२ ॥

(इति सधैर्यावष्टम्भं कोदण्डमास्फालयन्नुपवनाद्बहिर्निष्क्रान्तः ।)

(नेपथ्ये ।)

भो भो रक्खिपुरुसा, पेक्खन्तीणं जेव्व अम्हाणं मज्झदो को वि णीलुप्पलसामलङ्गो कुण्डलिअकोअण्डदण्डो दण्डधरो विअ जीअ सुभद्दं हरिअ गच्छन्तो किं ण णिवारीअदि । (इत्यभिधाय सर्वाः ।) हद्धी हद्धी । पिअसहीं सुभद्दं विणा कधं अम्हे घरं जामो । (इति निष्क्रान्ताः ।) (ख)

---

(क) एवमतर्कितोपनतानि भवन्त्यभिलषितानि । आर्यपुत्र, एतावद्भयं मां न परित्यजति । यदि मम सोदराः श्रोष्यन्ति, तदा किं भविष्यतीति ।

(ख) भो भो रक्षिपुरुषाः, प्रेक्षन्तीनामेवास्माकं मध्यतः कोऽपि नीलोत्पलश्यामलाङ्गः कुण्डलितकोदण्डदण्डो दण्डधर इव... सुभद्रां हृत्वा गच्छन्किं न निवार्यते । हा धिक् हा धिक् । प्रियसखीं सुभद्रां विना कथं वयं गृहं यामः ।

(ततः प्रविशन्ति गृहीतवाग्शासनाः पार्थमनुधावन्तो वल्गन्तो रक्षिपुरुषाः। ते च परस्परम्।)

तत्रैके—एष कामो वनान्निष्क्रम्योद्दण्डभुजदण्डमण्डलाकाण्डताण्डवितकोदण्डप्रमुक्तप्रचण्डकाण्डैरखण्डब्रह्माण्डभाण्डोदरमामण्डयन्नुत्तुङ्गशताङ्गमारूढो दलितार्द्रहरिद्रानवद्युतिसुभद्राभद्रवामभागमुद्रस्तरुणतमालश्यामकान्तिरुज्जृम्भमाणजम्भारिधन्वोत्तरलतडिन्निबिडासारोत्पातोत्पतत्पर्वतोपरि प्रत्यासन्नस्तनयित्नुशोभां विडम्बयन्नातिदूरदेशमतिक्रान्तः। तदेतस्य गमनान्तरायं सत्वरमुपसृत्य कुर्महे।

ततस्तदपरे—किं न श्रुतं यत् 'अयमहमर्जुनोऽस्मि' इत्युक्तवान्। तन्निवर्तध्वम्। यतः कृशानुना सह तृणानां कीदृशः कलहः। तत्क्षतजोक्षितविग्रहाः कथं कथमपि गत्वा श्रीमतो बलदेवस्योग्रसेनस्य चेमं वृत्तान्तं निवेदयामः। तदनन्तरं यद्भविष्यति तद्भवतु। (इति पुनः पुनः संमन्त्र्य राजद्वारमागत्योच्चैः।) शृणुत भो यदुवंशमणयः, शृणुत। यत्केनापि क्षत्रियकुमारेणाथवा शौर्यशालिनार्जुनेन वसन्तोत्सवप्रकारैर्निःशङ्कं क्रीडमाणानां यदुकुलकन्यकानां मध्यात्पुष्पंधयेनेव कमलपलाशावलीनां मकरन्दधारेव सुभद्रैकापहृत्य रथमारोप्योदङ्मुखं नीयत इति। वयं तु शरविक्षताङ्गा अपि तमनुधावन्तस्तेन महावीरेण तथा शरपञ्जरे प्रापिता यथात्रापि प्रतिनिवृत्त्यागन्तुमशक्ता अभूम, किं पुनस्तत्र गन्तुम्। अतः परं देवादेशः प्रमाणम्। (इत्यभिधाय सलज्जमधोमुखास्तत्र तस्थुः।)

(अथैतदाकर्ण्य)

रेवती—(बलदेवं प्रति।) अज्जउत्त, सरिमन्तेण आअण्णिदं किं वि। (क)

बलदेवः—न खलु। किं प्रिये।

रेवती—सुभद्दा केणावि ओहरिआ सुणीअदि त्ति। (ख)

बलदेवः—अथ भवत्या कुतः समाकर्णितम्।

रेवती—णं दाणिं पडिहारप्पदेसपच्चासण्णरक्खिलोएहिं णिवेदीअमाणं मए आअण्णिअम्। (ग)

---

(क) आर्यपुत्र, श्रीमताकर्णितं किमपि।

(ख) सुभद्रा केनाप्यपहृता श्रूयत इति।

(ग) नन्विदानीं प्रतिहारप्रदेशप्रत्यासन्नरक्षिलोकैर्निवेद्यमानं मयाकर्णितम्।

**बलदेवः**—अपि सत्यम् ।

**रेवती**— सच्चं जेव्व । जदो सुमदिआ सा पिअसही तां विणा एआइणी अस्सुपुण्णलोअणा इध ज्जेव्व आअच्छदि त्ति । (क)

**बलदेवः**—ततस्तस्याः सकाशात्सर्वमवधार्य ममावेदय ।

(ततः प्रविशति सुमतिका ।)

**सुमतिका**—(सविषादम् ।) पिअसहि रेवति, सुभद्दा ओहरिआ । (ख)

**रेवती**—सुमदिए, अवि ओधारिदं केणे त्ति । (ग)

**सुमतिका**—जो तवस्सिवेसेण इध ज्जेव्व णअरे जादवजणाहिं पूजिअमाणो आसी, देण । (घ)

**रेवती**—अवि तुए विण्णातं को सो । (ङ)

**सुमतिका**—महाभाए, एत्तिअ आणामि । एक्कस्सिं दिअसे सो भिक्खुओ भिक्खाणिमित्तं आअदो आसी । तदो पिअसहीए अदिहिपूजाणिअमं णिव्वाहअन्तीए सो पुच्छिदो, पढमं को भवं त्ति । तदो तेण भणिदं ककुहतरुपज्जाअणामो हं त्ति । (च)

**रेवती**—(स्वगतम् ।) तेण हि तस्सिं साणुरत्तमणे त्ति तक्केमि । (प्रकाशम् ।) तदो तदो । (छ)

**सुमतिका**—तदो मए कहिअं एदस्स णाम अज्जुनेति । (ज)

---

(क) सत्यमेव । यतः सुमतिकास्याः प्रियसखी तां विनैकाकिन्यश्रुपूर्णलोचनात्रैवागच्छतीति ।

(ख) प्रियसखि रेवति, सुभद्रापहृता ।

(ग) सुमतिके, अप्यवधारितं केनेति ।

(घ) यस्तपस्विवेषेणात्रैव नगरे यादवजनैः पूज्यमान आसीत्, तेन ।

(ङ) अपि त्वया विज्ञातं कः सः ।

(च) महाभागे, एतावज्जानामि । एकस्मिन्दिवसे स भिक्षुको भिक्षानिमित्तमागत आसीत् । तदा प्रियसख्यातिथिपूजानियमं निर्वाहयन्त्या स पृष्टः, प्रथमं को भवानिति । तदा तेन भणितं ककुभतरुपर्यायनामाहमिति ।

(छ) तेन हि तस्मिन्सानुरक्तमना इति तर्कयामि । ततस्ततः ।

(ज) ततो मया कथितमेतस्य नामार्जुन इति ।

**रेवती**—(विचार्य ।) एव्वमेवम् । (इति बलदेवाय निवेदयति ।) (क)

**बलदेवः**—तेन हि तस्येममतिक्रमं न विषहे । (इति तामभिधाय मदघूर्णमानलोचनः सुधर्मां समागत्य साहंकारामर्षम् ।) अहो, पश्यन्त्वस्य कुरुकुलडिम्भस्य दुर्विलसितम् । कः कोऽत्र भोः ।

(प्रविश्य ।)

**दौवारिकः**—देव, पडिहारप्पदेसे रक्खिलोआ उवट्ठिदा देवं दट्ठुं पत्थअन्ति । (ख)

**बलदेवः**—तर्हि त्वरितं प्रवेश्यताम् ।

**दौवारिकः**—(निष्क्रम्य तैः सह प्रविश्य ।) देव, एदे रक्खिणो देवं पणमिअ वेण्णवन्ति । (ग)

**बलदेवः**—किं कथयन्ति ।

**रक्षिणः**—(सभयं प्रणम्य ।) देव, वयमेते गुल्मस्याधिकारमाचरन्तः क्रीडोद्यानाद्बहिरेव स्थिताः । श्रीमती सुभद्रा च सकलयदुकुलकन्यकाभिः सह क्रीडोद्यानं प्रविष्टा । एतस्मिन्नन्तरे

ज्वालाताण्डवतुण्डखाण्डववनोच्चण्डाग्निसंतर्पणे
य: पाण्डित्यमखण्डयद्रणशिरस्याखण्डलस्योद्धतम् ।
दोर्दण्डेन मुहुः स पाण्डवयुवा कोदण्डमास्फालय-
न्काण्डैरेव करण्डयञ्जगदिदं बालामकाण्डेऽहरत् ॥ ३२ ॥

**बलदेवः**—ततस्ततः ।

**रक्षिणः**—ततस्तमनुधावन्तः शरप्रहारक्षताङ्गाः शीर्णशस्त्रास्तद्बाणवज्रपञ्जरं भेत्तुमक्षमा श्रीमते भवते राज्ञ उग्रसेनाय च निवेदयितुमागताः स्मः ।

(ततः प्रविशति यदुवीरैः सहोग्रसेनः ।)

**बलदेवः**—(उग्रसेनं दृष्ट्वा ।) राजन्, श्रुतम् ।

**उग्रसेनः**—प्रथममेव रक्षिभिर्निवेद्यमानम् । परं यदेतत्सुभद्राहरणं तत्तु

---

(क) एवमेवम् ।

(ख) देव, प्रतिहारप्रदेशे रक्षिलोका उपस्थिता देवं द्रष्टुं प्रार्थयन्ते ।

(ग) देव, एते रक्षिणो देवं प्रणम्य विज्ञापयन्ति ।

फणामणेराहरणं मृगेन्द्रवक्त्राद्दिक्कुष्टिनेवदंष्ट्रिकायाः ।
ग्रहः शिखाया ज्वलदग्निकुण्डाद्वीचेर्निरोधः प्रलयाम्बुराशेः ॥ ३४ ॥
तदाज्ञाप्यन्तां यदुप्रवीरास्तस्याक्रमेण पराक्रमाभिमानमपनेतुम् ।

**बलदेवः**—तथा क्रियताम् ।

**उग्रसेनः**—अहो, कृतमेव प्रयाणं यदुप्रवीरैः ।

गर्जत्कल्पान्तकालाम्बुदवलितमहास्फूर्जथुस्फारमूर्तिः
शैलप्राकाररन्ध्रोदरजनितदृषद्भेदनिःस्वानभित्तः ।
क्षुभ्यद्दिक्कुम्भिकर्णोत्कटविवरतटीघट्टनाध्मानधीरः
स्पर्धिष्णूच्चाटमन्त्रः प्रसरति परितः प्रौढढक्कानिनादः ॥ ३५ ॥

**बलदेवः**—राजन्, क्षणमेकमेते निवार्यन्ताम् । यतो वयं श्रीकृष्णस्यानुमतिमन्तरेण न किंचित्कर्तुमुत्सहामहे । नो चेदहमेवेदानीम्

इन्द्रप्रस्थं कौरवैः सार्धमूर्ध्वे कालिन्दीये प्रक्षिपामि प्रवाहे ।
क्षेत्रोत्खातस्थूललोष्टायितं वा सीताशीर्णं लाङ्गलाग्रेण कुर्वे ॥ ३६ ॥

(तत प्रविशति प्रसन्नगम्भीराकृतिर्महोदारप्रकृतिर्भगवाञ्श्रीकृष्णः ।)

**उग्रसेनः**—(श्रीकृष्णं प्रति ।) न श्रुतं यद्भीमसेनानुजेनानुचितं धाष्टर्यमाचरितम् ।

**श्रीकृष्णः**—श्रुतं विचारितं च । यद्यप्येवं तथाप्यर्जुनः खल्वयमस्थानममर्षस्य । यतः ।

मान्या पृथास्माकमनेकभावैरतस्तदीयस्तनयोऽपि मान्यः ।
किं च त्रिलोकीवलयैकवीरमेनं विनास्या कतमो वरः स्यात् ॥ ३७ ॥

अपि चानुचितं च किमत्र । येन ।

क्षत्रियाणां विवाहस्तु प्रशस्तो राक्षसः स्मृतौ ।
श्रुतौ मातुलकन्या च परिणेयेति दृश्यते ॥ ३८ ॥

किं च युद्धार्थं प्रस्थापितैरप्येभिर्न कापि कार्यसिद्धिः । यतः ।

एकोऽर्जुनः समरमूर्धनि योद्धृकोटिं
हन्याद्व्रजेद्विधिवशादुत वीरशय्याम् ।
पक्षद्वयेऽपि भवति क्षतिरस्मदीया
तेनात्र सप्रणयमेष विसर्जनीयः ॥ ३९ ॥

**बलदेवः**—(अमर्षं परित्यज्य ।) यद्भवते रोचते । (इति सालस्यमभिधाय तानेव यदुवीरान्यौतुकादिवस्तुभिः श्रीमन्तमर्जुनं तोषयितुं आदिशत् ।)

(अन्तरिक्षात्पुष्पवृष्टिर्निपतति ।)

(ततः प्रविशत्यञ्जलौ मुक्ताहारद्वयं दधानो दिव्यपुरुषः ।)

**पुरुषः**—भगवन्तौ, प्रणमामि ।

**बलदेवः**—भद्र को भवान् । कथमत्रागतः ।

**पुरुषः**—भगवन्, इन्द्रसेवकोऽहम् । तत्संदेशकथनाय भवत्समीपमागतोऽस्मि ।

**बलदेवश्रीकृष्णौ**—कथय किं संदिष्टं महेन्द्रेण ।

**पुरुषः**—यदेतत्सव्यसाचिनोऽत्यद्भुतं कर्मानुमोदितं भवद्भ्यां तन्महदेव देवकार्यमनुष्ठितम् । यदेतत्संभवेन महावीरेणास्मत्साहाय्यमाचरणीयम्, तदेतदुपायनमुभयोः प्रेषितम् । (इति संपुटीकृतकराञ्जलिपुटात्प्रकटय्य क्षीरोदमथनोद्भूतमतिमनोहरं हारद्वयं समर्पयति ।)

(उभौ सप्रणयं गृहीत्वा कण्ठे प्रतिमुञ्चतः ।)

**सभासदः**—(बलदेवश्रीकृष्णौ प्रति ।)

अवलक्षवलक्षपक्षयोरधिनक्षत्रविलक्षणत्विषोः ।
सुषमा परिलभ्यतेऽधुना धृतमुक्तामयमालिकाश्रिया ॥ ४० ॥

**पुरुषः**—'परं च किंचित्समीहितमसंकोचेनाभिधेयं भवद्भ्याम्' इत्यपि मत्प्रभोः संदेशः ।

**बलदेवश्रीकृष्णौ**—किमपरं भगवतो महेन्द्रस्य संतोषात् । तथाप्येतद्भवतु ।

पातिव्रत्यपराः स्त्रियः प्रसुवतां पुत्रान्प्रकृष्टायुषः
स्यादुर्वी सकलोर्वरा नरपतिर्भूयात्परं नीतिमान् ।
लोकः पापपराङ्मुखोऽस्तु सुजनाः सन्तु प्रसन्नाशया
भूयासुर्विदिशो दिशश्च सततं मङ्गल्यमालोज्ज्वलाः ॥ ४१ ॥

(इति निष्क्रान्ताः सर्वे ।)

जननीन्दुमती यस्य जनको मण्डलेश्वरः ।
भ्राता हरिहरो यस्य स ख्यातो माधवः कविः ॥

इति श्रीमन्मण्डलेश्वरभट्टात्मजमाधवभट्टविरचितं सुभद्राहरणं नाम श्रीगदितं समाप्तम् ।